# ारुचरितामृतम्

रचयिता

वेदार्थ कल्पद्रुम प्रणेता आर्यरत्न व्याकरणाचार्य

**डा० विशुद्धानन्द मिश्रः**

विद्यावारिधिः, दर्शन वाचस्पति

सम्पादिके

**श्रीमती निर्मला देवी**

प्राचार्या

पार्वती आर्य कन्या संस्कृत इन्टर कालेज, बदायूँ

**श्रीमती वेदाचार्या सावित्री देवी**

विदुषी

सावित्री सदन, केलाबाग, बरेली

प्रकाशक :—
श्री अरविन्द लाल शर्मा
सुपुत्र स्व० श्री पं० बिहारी लाल शास्त्री
रामपुर बाग, बरेली

आर्य संस्कृति गौरव स्तम्भाः

# विजय

श्रद्धेय चरित नायक शास्त्रार्थ महारथी
वेदवेदाङ्ग मर्मज्ञ वाणी भूषण
स्व. श्री पं. बिहारी लाल शास्त्रिणः
काव्यतीर्थ साहित्य शास्त्रिणः

मूल्य :— श्रद्धा - समर्पण

## गुरूणां चारित्र्यस्मृतिरपि तु [illegible]



इदं नु खलु सुविदितमेव श्रुतिधर्मिवरेयाणाम् शर्मद - धर्म - कर्म - वर्मणाम् महर्षि दयानन्द सरस्वती प्रदिष्टवर्त्म - वर्त्तिनाम् मात्सर्यमुत्सार्य विचार्य आर्यमर्यादा - परायणानाम् यत् महाभागाः साहितीरसिकाः काव्य न्याय- व्याकरण - वेदान्तशास्त्र - परिशीलन- सन्तर्पितस्वान्ताः तर्कार्करश्मि निकरच्छिन्न- वेद-विद्वेष- राद्धान्त- प्रसृत्वरतिमिर राशयो महाशयाः श्रद्धेयाः श्री पं. विहारी लाल शास्त्रिणो वैदिक धर्म प्रचार प्रसार समर्पित निखिल जीवनाः अधुना अपि जराजर्जरितकलेवराः सन्तो महान्तस्तत्र भवन्त. अष्टाशीतितमे आयुषो वर्षेऽहर्निशम् परम - संलग्नतया प्रवचने ग्रन्थरचने ब्रह्मचर्चनार्चने च सकलं कालं यापयन्ति किल ।

तेषां चारुचरितकलकीर्तिगानं सर्वथा समुत्साह- सञ्चारं जनयिष्यते मानसेषु धर्म प्रणयिनाम् इति निश्चप्रचम् ।

एतां साधुचरित- समर्चन- रुचि- रुचिरां काव्यप्रणीतिमभिनन्दयन्ता अहम् स्वजीवन- सहचरस्य कविवरस्यैतस्य सुरगिरा- समुपासन- सुव्रतस्य चरित- सङ्कीर्त्तन- व्याजेन निर्व्याजम् अमर-भारत्याः कमपि अनिर्वचनीय- निर्मलान्द- जनकम् समर्चाभावमनुमन्ये पितृदेर्वर्षिसन्तर्पणाविधिम्चेति ।

सुर-भारतीसमुपासिका :—
निर्मला मिश्रा

# समर्पणम्

यन् मातुः प्रियपादपङ्कजरजः सम्मार्जिते लोचने,
दिव्यार्थग्रथितं श्रुतिप्रणिहितं सारस्वतं भासते।
गायन्ती चरितं यदङ्घ्रियुगलध्यानेन वाक् क्षाञ्चिता,
तस्यै साधु समर्पये नतशिरा भावाञ्जलिं प्राञ्जलिः ॥

श्राद्धभावन - सम्भूतिः, मनसः प्रीतये कृतिः।
मात्रे पित्रे तथा श्वश्र्वै, श्वसुराय समर्प्यते ॥

श्रीमत्यै ललिता देवी मात्रे,
श्रीमद् अयोध्या प्रसाद मिश्र पित्रे,
श्रीमत्यै सुखदेव्यै श्वश्र्वै,
श्रीमद् व्रज नारायण शर्मणे श्वशुराय च।

# जीवन चरितम्



यत्सङ्कल्पजसंसृतिः प्रविततालीला - विलासस्थली,
यस्योन्मेष - वशादियं विलसिता सूर्यादिलोक - प्रभा ।
यन्माधुर्यमुपासितुं ह्युदयते ले वैधवीयं सुधा,
ध्यात्वा तद्विभ विहारिलाल-चरितं प्रस्तौमि दैव्या गिरा ॥ १

पादाम्बुजं कलुषराशि - विनाश - शीलम्,
वात्सल्य - निर्भरमथो निज - सन्ततीनाम् ।
ध्यायामि वन्द्यमखिल — श्रुतदं पितॄणाम्,
संसार - वारिनिधि - तारण - कारणं यत् ॥ २

येषां सौहृदमाप्य वाऽप्यतितरां भेजुः प्रसादं परम् ।
पूज्या मे पितरो विशुद्ध - हृदया भैषज्य - विद्या - चणाः ।
तेषां वैदिक - धर्म - मर्म - विदुषां चारित्र्य - संकीर्तनम्,
लोकानां मुदमङ्गलानि तनुतां सम्पादयन्मानसम् ॥ ३

वन्द्यौ नौ पितरौ ! सुनिर्मलमतिर्वां सुस्नुषा निर्मला,
युष्मत् - पाद-रजः-शुचि-स्मृति-हतैनो-राशि-पुत्रोऽप्ययम् ।
कालाल्लालित - लालसामनु सुरैरासाधितं शाश्वतम्,
बालानां ननु मातृ - भाजितमिवाभाषावहे संस्कृतम् ॥ ४

तस्यां मानसतृप्तयेऽमर गिरायां स्तौमि पादौ तु वाम्,
पश्चाद् विश्रुत - कीर्तिमानविभवस्यानृण्यमीप्सन् मुहुः ।
वाणीभूषण — सत्तपो — दमधनस्यालोभवृतेर्बुधः,
गायामि स्तुतिगौरवं श्रवणयोः पीयूष - धाराः स्रवत् ॥ ५

विद्वद्वर्य - विहारिलाल - सुधियः श्रेयोगुणानां निधेः
चित्वाऽहं कतिचिच्च विन्दुकणिकाः ध्यात्वा पितुः पावनम् ।
पुत्र- स्नेह- परं पदाम्बुज - युगं सख्यं च तेषां महत्,
गायामि स्तुतिमाश्रवः शुचियशो वाचामनः- पूतये ॥ ६

भारद्वाज - महर्षि - तीव्र - तपसा सम्पादिते चान्वये,
लक्ष्याऽराधित वेद विप्र विमलेऽयोध्याप्रसादः सुधीः ।
'आबादान्त मुराद' - मण्डल - गते ग्रामे जनुर्लब्धवान्,
विख्ये 'पागवड़ा'ऽभिधे शुचियशाः श्रीमान् गुणैर्गुम्फितः ॥ ७

सत्याचार - परायणा व्रतरताद्धर्मपत्नी तदा,
प्राचीनार्य - परम्परा - प्रतिकृतिः सारल्यमूर्तिः सती ।
एकान्ते सुमनोरथा करुणया कारुण्य - वारान्निधिम्,
सत्-सुतं श्रुतिपारगं गुणनिधिं देवी ययाचे विधिम् ॥ ८

ब्रह्मोवाच तथास्तु साध्वि सुमते ! ते कामना - पूर्तये,
एकं पण्डित - मण्डनं ननु सृजाम्यात्मानमुर्वीतले ।
श्रौतं धर्ममभिप्रवर्तयतु यः पाखण्डमाखण्डयन्,
येनाऽचार - परम्परा श्रुतिमता लोकेऽधुना सञ्चरेत् ॥ ९

तापस्ये सित - पक्ष - पावनतृतीयायां तिथौ वैक्रमे,
अब्दे सप्त चतुर्नवैक (१९४७) गणिते पुण्ये प्रसादात् प्रभोः ।
लेभे जन्म मुनि-प्रणीत-सरणेरुद्धारणायार्भकः,
पित्रोः पुण्यतरुः प्रसूननिचितोऽद्याभूत् फलैराचितः ॥ १०

सर्वाशा विमलाः प्रसेदुरभितो वाता ववुः सौख्यदाः,
आनन्दाऽमृत-वारिधौ तु हृदयं पित्रोर्न्यमज्जन्मुहुः ।
नो वै केवलमीप्सितं खलु तयोरेवाऽधुनाऽपूर्यत,
श्रुत्योरार्यजनस्य सूनुजनुषा माधुर्यधारास्रुता ॥ ११

सिंहः कानन - चारिणां समलसन् मूर्धन्य - देशे यथा,
शास्त्रारण्य - विहारिणामपि बुधां संसच् शिरोभूषणम् ।
भूयो लालयतां श्रुति - प्रवचनैश्चेतांसि नित्यं सताम्,
आचार्यास्तु "विहारिलाल" इति तं सार्थाभिधानं व्यधुः ॥ १२

पित्रोः कामनया समं शिशुरयं सम्वृद्धिमापद्यत,
एतेनैव सुतेन वृद्धिमगमत् स्वाशामुदा - वल्लरी ।
वल्लर्या सह फुल्लतां जनमनः - पुष्पाणि सम्भेजिरे,
पुष्पैः सार्धमभूदियं फलवती सारस्वती वाटिका ॥ १३

ये नैसर्गिक - संस्कृते शुभगुणाः व्याकोशतां पेदिरे,
या बुद्धि - प्रतिभा विकासमभजत् सद्यः समुन्मेषिणी।
'छेदीलाल' सुधीः समीक्ष्य सकलं वाले गुणानां गणम्,
अध्येतुं सुरवाचमाशु विमलां सप्रेरणां प्राददात्॥ १४

एतत् पण्डितपूज्यपादपितरः श्री लोकनारायणाः,
शिष्यं प्राप्य कुशाग्रबुद्धिमतुलं सौभाग्यमामेनिरे।
एषोऽभूद् गुरुवन्दनीयचरणाम्भोजव्रती षट् - पदः,
तत्राध्यैत तु शीघ्रबोधमपरां सारस्वतीं चन्द्रिकाम्॥ १५

सद्भाग्येन तु सन्निधिं गत इह श्रीवैद्यनाथः सुधीः,
तत् - सुस्नेहकृपावशात्त्वधिगतः सद्यः प्रवेशो मुरा —
दाबादे तु जवाहराख्यसुमनोवाचासुविद्यालये,
अत्यक्राम्यत मेधयाऽयमपरान् सर्वान् सहाध्यायिनः॥ १६

तत्र श्रीचरणाम्बुज - स्रुत - मधुस्वादोऽप्रमादेन वै,
काव्यं व्याकरणं समग्रमपठत् पूर्वां परीक्षामनु।
उत्तीर्य प्रथमां प्रशिक्षक पदं विद्यालये सम्भले,
लेभेचार्य- समाज- चालित- विधौ ह्यस्मत्- कथानायकः॥ १७

अत्रैवैष महोपदेशकबुधैः शास्त्रार्थ – निष्णातकैः,
सत्सङ्गं शिवशर्मभिः सुकृतिभिः सम्प्राप्य विद्वद्वरैः।
सङ्कल्पं कृतवान् दयानिधि - दयानन्दस्य सद्वर्त्मना,
शश्वद् वेद - विरोधि- दुर्मति- गलत्- पङ्क-प्रणाशाय वै॥ १८

वेदद्वेषघनान्धकारितधिया सञ्चालिताः कुप्रथाः,
शास्त्राऽवाधित तर्ककर्कशशरैरुच्छेदयन् शाश्वतम्।
आर्षं प्रातिभसम्मता यतिदयानन्दस्य या पद्धतिः,
सर्वत्र श्रुतिभास्करस्य तनुतां प्रोद्यत्- प्रभा- भास्करा॥ १९

इत्येवं प्रविचार्य धर्म - धरणीं निष्कल्मषां भारतीम्,
देवैरर्च्यकलेवरां प्रविततां देशे विधातुं व्रती।
लेखान् संस्कृति पोषकान् खलु लिखन् दुर्मान्यताध्वंसकान्,
व्याख्यानानि वहूनि भाषणकलानैपुण्यभाञ्जि व्यधात्॥ २०

वक्तृणां प्रवराः दयालुहृदयाः वंशीधराः पाठकाः,
एतद् रत्नमवाप्य ते सुकृतिनो वाचाकला - भूषितम्।
उत्साहोत्कलिकां मुद्रा विदधिरे धर्म्या मुहुर्मानसे,
सोऽयं स्तुत्यमदीधरत् दृढमहो धर्म - प्रचारव्रतम्॥ २१

विद्यामन्दिर एव शिक्षक - पदं मोहम्मदीयेऽध्यगात्,
तत्राप्येतदशेष - शेष - समयं धर्मोद्धृतौ यापयन्।
निर्लोभः प्रणवान् रणे निपुणया मत्या सुतर्कश्रिया,
शास्त्रार्थे तु धुरन्धरान् विजितवान् मञ्चं समञ्चन् सदा॥ २२

सौवर्ण - प्रभया यथा घनतमो राशिं ह्युषा - वल्लभः,
उच्छिन्दन् समुदेति शैल- शिखरे पक्षिव्रजं मोदयन्।
शास्त्रग्राव - निघर्षणान्निशितया सौवर्ण- संरोचिषा,
सूर्यो नाशितहृत्तमाः समुदितो मञ्चे बुधान् वैदिकः॥ २३

आगात् पण्डितवर्यं आर्य - जनता - मोदं मुहुर्वर्धयन्;
विद्याऽऽगार - निरीक्षकोऽभवदसावस्मिन् बरेली - पुरे।
सार्धं वर्षमगात् सरायतरणिं ह्यार्याऽनुरोधात् पुनः;
भाग्येन प्रहितो न्यरुध्यत विपद्व्यूहं वरीतुं ततः॥ २४

सेहे शङ्कर एव दुःख - निवहं धर्म - प्रचारे यदा,
सामोदं गरलं पपौ ऋषि - दयानन्दोऽपि धर्मध्वनि।
श्रद्धानन्द - यतिर्निजानपि ददौ प्राणान् प्रियान् सुव्रतः,
श्रीमान् पण्डित लेखराम - सुमतिर्धर्माय वव्रे मृतिम्॥ २५

अश्फाक्-विस्मिल-भक्त सिंह-प्रभृतीन् क्रान्तिव्रतान् पश्यतु,
प्राणान्दातुमिमेवपाश - पटले रज्जूं व्यचुम्बन् मुहुः।
मातुर्बन्धन - कर्त्तनाय सरलामेतां सृतिं मेनिरे,
आयान्त्यो विपदाः कदाऽपि सुपथान्नोच्चालयन्ते सतः॥ २६

ऊनत्रिंशनवम्बरे ननु समाजस्यालये चाक्रमन्,
वेदेन्द्वङ्क विधौ(१९१४)अकार्षुरखिलान् तानायुधैराहतान्।
ते दुर्दान्त - मदान्धकारितधियो मोहम्मदीयाः जनाः,
सम्प्राहार्षुरसूंश्च हर्त्तुंमपि वै श्रीशास्त्रिणामञ्जसा॥ २७

ते मत्वोपरतं समुज्झ्य सहसा प्राद्रवन् शास्त्रिणम्,
दैवाद् रक्षितजीवितः पुनरहो धर्मप्रचाराय वै।
गत्वा पश्य वनावनौ तरुततीः पूर्णा नवैः पल्लवैः,
त्राता यस्य न दृश्यते भुवि नृभिस्तस्येश्वरस्त्राणकृत् ॥ २८

पश्चादार्य - मुसाफिरेऽर्गलपुरे विद्यालयेऽध्यापनम्,
कृत्वा वै 'विजनौर' आर्यसमितौ वक्तृत्ववृत्तिं चरन्।
अस्पृश्यत्व निवारणं प्रहिसमारोहः सहाऽऽभोजनम्,
एवं वैविधमुद्धृतेः समुचितं ह्यान्दोलनं संव्यधात् ॥ २९

अत्रैवार्य मुसाफिरः सुखपुरोलालाऽभिधः शिष्यताम्,
भेजे चाविजगे श्रुति - प्रणिहितं सिद्धान्तमर्माखिलम्।
सङ्गीतेऽपि च तीक्ष्णधीरभजत प्रख्यं परं कौशलम्,
सत् पात्रे समये धृता फलवती विद्या सदा जायते ॥ ३०

यत्पादाम्बुज - सेवनेन सततं ज्ञानेन सन्दीक्षितः,
वेदस्मृत्यभिसम्मतं तु विमलं राद्धान्तमाराधयन्।
शिष्यस्तानुपदेष्टुमागममतप्रद्वेषिणो मानवान्,
'प्रेमानन्द' सरस्वती यतिवरो वर्माख्य - देशं ययौ ॥ ३१

एतास्यागम - पारगस्य 'अमर स्वामी' तु शिष्याग्रणीः,
शास्त्रारण्य - विहारि - सिंह -सुबुधः पौराणमर्माऽऽविदन्।
भक्तो देवदयानिधेर्मुनिदयानन्दस्य सिद्धान्तवित्,
शास्त्रार्थे सुमहारथः श्रुतयशाः कस्य श्रुतिं नाऽऽययौ ? ३२

एतेष्वेव विपश्चिदग्रिमततीः संभूपयत्सु, प्रभा -
ज्ञानोदन्वदघट्टरोधसि निषीदन्नूर्मिवेलाजले।
मुक्तारत्नसमागमक्षणमहं कालात् प्रतीक्षे परम्,
क्रोडीकृत्य च नीर-शुक्तिमधुना शिष्येषु तिष्ठामि किम् ? ३३

श्रद्धानन्द हुतात्म - वीर - यतिना सन्दर्शिते वर्मनि,
शुद्धेर्विश्रुत - कर्मणश्च कठिनं हिन्दुत्व - रक्षा - व्रतम्।
सन्धार्यार्यसमाजसाधितधियाऽकार्षीन् महान्दोलनम्,
म्लेच्छान् वैदिकधर्मकर्मनिरतन् कृत्वाऽन्वभूत् सान्त्वनाम् ॥ ३४

एवं कालमयापयत् श्रुतिमत - प्रासार - पूजारतः,
'गच्छन् ग्राममपि स्पृशेल् लघुतृणं, चेत्थं स्ववृत्याऽचरन् ।
अष्टाब्दांस्तु 'बरेलिका' पुर इहोज्झानीगगर्य्यां गतः,
विद्यादानपरायणस्त्रिगुणितान् प्राप्तावकाशः प्रधीः ॥ ३५

एवं जातु जहुः कदाचिदपि वा शास्त्रार्थ आयोधने,
शास्त्रारण्य विहारिणः प्रति भटान् शास्त्रज्ञता - दर्पितान् ।
नाऽकृत्वा वहुमर्दितान् विदलयन्तोऽरन्नर्वगर्वान् इमे,
सिंहो हुङ्करुतेऽनुमेघनिनदं गोमायुरावं न वै ॥ ३६

हिन्दूजातिरियं मुमूर्षूरभवत् वेदस्य शिक्षां विना,
देवो दिव्यगुणाभिभूषित ऋषिः प्रागत्य देवालयात् ।
वेदस्यामृतधारया पुनरहो संजीव्य जातिं ततः,
ईदृग्वेदसुभक्तिषु प्रतिगतो विन्यस्य भारं दिवम् ॥ ३७

भक्तेष्वेव 'मुरारिलाल' सुमतिः श्री 'वासुदेवः' सुधीः,
श्रीमान् 'रामदयालु' शास्त्रिमुखरो 'रामस्वरुपो' द्विजः ।
श्रीमन् 'नन्दकिशोर' शुक्ल तनयः श्री 'रामदत्तो' ऽपिवा,
भक्तिं भेजिर एव वैदिकमते सद्विप्रवंशोद्भवाः ॥ ३८

तेऽमी सुश्रुतदीक्षिता ऋषिवरश्रद्धासुधास्नापित,
स्वान्ताः वेदमताऽनुयायि जगतो वन्द्याभिनन्द्याः सताम् ।
स्वाध्यायेन जयैश्च होमविधिना संपूतवृत्ताः बुधाः,
आत्माङ्कानु(९२)मिताब्ददेश्यवयसि प्रावर्त्तयन् जीवनम् ॥ ३९

अस्मिन् जीवनसङ्क्रमे प्रतिदिनं स्वाध्याय - सन्दोहने,
शङ्कोद्भावन - तत्समाधि - रचना - नेत्र - प्रसक्तेन वै ।
सत्सङ्कल्पनमन्थदण्डगिरिणा रत्नाकरं नैगमम्,
शिक्षा - रत्नसमुच्चयं प्रकुरुते शश्वत् समालोडयन् ॥ ४०

श्रुत्यभ्यासरताः वृताखिलमनुष्योद्धारसेवाशुचिम्,
धर्मस्यैव निरन्तरं प्रवचनैरुद्बोधयन्तो रुचिम् ।
यात्रा - कष्ट - विघृष्टवृद्धवयसि प्रस्फूर्तिमन्तो यथा;
वेदोद्धारण - लग्नतामदिरया विस्मृत्य कायस्थितिम् ॥ ४१

शास्त्रार्थहिवसङ्गतान् श्रुतिमतप्रद्वेषिणो मानवान्,
आदृत्यानुगमान् कुरान-पठने निष्ठापरान् श्रावकान् ।
तीर्णैस्तर्कशरैर्विजित्य बहुशोऽप्यन्यान् पुराणानुगान्,
विद्वद्राजमणिर्व्यमर्दयदलं तं माधवं चाजयत् ॥ ४२

सुरगिरा - परि - पावित - मानसाः,
मधुसुधा - परि - वर्षण — वारिदाः ।
निगम - सारविवेचन -- पण्डिताः,
शुभ - गुणौघ - मति - प्रतिमण्डिताः ॥ ४३

सकल -- शास्त्र — विमर्शनशेमुषी —
प्रतिहत — प्रसर — प्रतिपक्षिणः ।
प्रखर - कर्कश - तर्क - सुयुक्तिभिः,
निज - मत - प्रतिरक्षण - दक्षिणाः ॥ ४४

कुमत - माधव - दुर्मद - मर्दिनः,
मदनमान -- विमर्द -- कपर्दिनः ।
निगमशास्त्र - मतानुग -- शङ्कराः,
श्रुति -- विधि -- प्रतिवादि - भयङ्कराः ॥ ४५

सुरगिरा --, समुपासन -- पाविताम्,
विविधबोध - विवेचन -- भासिताम् ।
व्यवहृतौ - धृत सौष्ठव - पाटवीम्,
दधति ये विमलामिह शेमुषीम् ॥ ४६

ननु पुराण -- मतानुगमाधवः,
प्रतिकृति -- प्रतिपूजन -- दीक्षितः ।
अभिययौ श्रुतिशास्त्र -- विमर्शने,
हरिमिव प्रबलं खलु जम्बुकः ॥ ४७

"समवलोकयतां तु "सुजातवत,
पशुपते" इति मन्त्र – विवेचने ।
शतपथे जड - मूर्ति - विनिर्मितिम्,
इति विचक्षणमाह स माधवः ॥ ४८

उदतरन् प्रतिभा — परिमण्डिताः,
जडसर्मचंन — खण्डन — पण्डिताः ।
सुमति - दत्ततिलाञ्जलि - माधवम्,
प्रकरणं प्रथमं प्रतिबुध्यताम् ।। ४९

बहुलमन्त्र - समुद्धृति - पूर्त्रकम्,
विभु - समर्चन - मेव मुनीरितम् ।
उदरमस्य नभः प्रतिपादितम्,
वसुमती धरणी चरणायते ।। ५०

दिवमिमां रविचन्द्र -- सुलक्षणाम्,
शिर इति प्रवदन्ति विचक्षणाः ।
प्रतिकृतिः प्रकृतेर्भवतात् कथम् ?
अवयवैः रहितस्य निसर्गतः ।। ५१

शतपथे नहि मूर्ति विनिर्मितिः,
नहि विधिर्गदितोऽपि तदर्चने ।
अलमलङ्कृति — सम्बलितं श्रुतौ,
प्रकरणं निखिलन्तु विविच्यताम् ।। ५२

प्रखर - तर्क - विकर्त्तन - मार्गण -
किरण - संहृतिभिः समुदच्छिनत् ।
रविरयं लघु - माधव - संस्तुताम्,
वहु - पुराण - प्रमाण - तमस्तुतिम् ।। ५३

वेदायम्यभिधानके तु नगरे कर्त्तुं क्षमायाचनम्,
प्रास्तौत् प्रस्तर- पूजनार्पितमतिर्यो वै क्षमापत्रकम् ।
वाग्मी तं ह्यसकृद् व्यमर्दयदलं पौराणिकं माधवम्,
सत्कीर्त्तेर्जयघोषणां व्यधुरमी सर्वेजनाः साक्षिणः ।। ५४

मण्डूकोऽपि लघूत्प्लवैर्गिरवरोत्तुङ्गत्वमुल्लिङ्घितुम्,
धत्तां क्वाऽपि पिपीलिकाऽपि च रुचिं चन्द्राननं चुम्बितुम् ।
फेरुः केसरिणः सटाच्छरुचिभिः कान्तस्य राज्यासनम्,
प्राधिष्ठातुमपीहतां सरिदसौ गङ्गायशो घर्घरा ।। ५५

उन्मत्ता प्रभवेत्तु नाल - निखने भेकी वराकी क्वचित्,
सोढुं दुर्बल - विग्रहा घनहतिं किं वाजिनः स्पर्धने ?
गङ्गुतैलिक एतु भोज- नृपतां, स्यात् शूकरोल्लोठनोत्—
क्षुब्धान्तर्जलगर्त्तमुज्ज्वल - पयः - पूरं सरो मानसम् ।। ५६

पालाशं कुसुमन्तु धित्सतु पुनस्तत् पाटलावल्लरी –
पुष्पव्रातक - सौरभं, ह्यभिनयेत् कुल्या च वारान्निधेः ।
वैपुल्यं, नहि चित्रमत्र विपुलं मुग्धो मुहुर्माधवो,
वादं तेन विहारिलाल - विदुषा साकं विदध्यात् कथम् ? ५७

उपदिशन्निव कोपन — माधवम्,
ऋषि — विनिन्दकमाह मुहुर्बुधः ।
न सविधे तव गालि कला - निधे ?
समभवत् शुचि - शब्द - पदावली ।। ५८

कलिसलाऽऽकुल - कीलित - कौशला,
किल कला कुटिला तव भाषणे ।
कुटिलतां त्यजताज्जरदायुषि,
ऋषिवरानुचरो रुचिरो भव ।। ५९

मितमते ! प्रतिमा न महीयसोऽ —
परिमितस्य मति - श्रुति - सम्मता ।
पशुवलिर्लघु — बुद्धिमतोऽध्वरेऽ —
वुध - वरेण्यमते वत मन्यते ।। ६०

न
मतं प्रतिमा - परि - पूजनं,
श्रुति - विधौ क्वचिदेव विचक्षणैः ।
परिविहाय जड — प्रतिमाऽर्चनम्,
कणकणे लसितं भजतां विभुम् ।। ६१

सुरगिरा — गरिमाऽगरुवासितम्,
श्रुति- सुधारसधार - विभासितम् ।
विमल - चारुवचो - रचनार्ऽचितम्,
ऋषिवरार्च्य — चरित्रमुपास्यता ।। ६२

अमित — पङ्क — कलङ्कमशङ्कितम् ,
श्रुति - सृतौ तु पुराणमताविलम् ।
कृतमतः परमत्र विदेहि भोः ,
शुभ — विनिश्चितिमात्म—विशुद्धये ॥ ६३

दशरथात्मज — कंस — विमर्दिनौ ,
अभिमतौ च सनातनधर्मिणाम् ।
प्रियतरौ हि तथार्यसमाजिनाम् ,
अनवतारमहापुरुषौ मतौ ॥ ६४

नहि सनातन - धर्म — तरुच्छिदां ,
कलुष - वृत्ति - पुराण - विनीतिभिः ।
परशुभिः प्रविधेहि च माधव!
श्रुतिमतप्रहरो न निरुध्यताम् ॥ ६५

न च वयं प्रतिमा— परिपूजकाः ,
न च मुधा प्रतिमा—प्रतिभञ्जकाः ।
पुनरजन्मन ईश्वरस्य किम् ,
समभवत् प्रतिमूर्ति—विनिर्मितिः ? ६६

मयि सुधाऽभिमति सुर - पूजनम् ,
पुनरवादि ईडनमाह यत् ।
उभय - सम्मत एव विधिस्तदा ,
निज - कपोट - हतिः स्वमुखे तव ॥ ६७

अपरतः प्रविचारय माधव !
प्रतिकृती नहि द्वेऽपि च वस्तुनी ।
व्यवहृतौ इदमादर — सूचनम् ,
न प्रतिमार्चन — गन्ध इह क्वचित् ॥ ६८

बहुविवाद - विवादित - दुर्धर — ,
स्फुरदघौघ — घनावलि — संवृतः ।
श्रुति - विरोधि - विचारक - राहुभि —
निगलितः श्रुतिभास्कर ईदृशैः ॥ ६९

इति पुनः प्रथितैर्निगमानुगैः,
अपि समुद्धरणै - र्ऋषि - सम्मतैः।
परमबोधयदेष च माधवम्,
सुबहुशो ध्वनि - लक्षण - भूषितैः ॥ ७०

एवं ततो दर्शक — वृन्दमध्यात्,
विहारिलालस्य जयप्रघोषः।
यशःसितिम्ना धवलीकरिष्यन्।
दिशः समस्ताः बधिरीचकार ॥ ७१

दुर्वृत्त - दुर्वृत्र - वधाय सद्यः,
समाययौ काशयितुं दिवोऽयम्।
वेद — प्रकाशं भुवि - मानवेषु,
शास्त्रज्ञवर्यस्तु विहारिलालः ॥ ७२

विहरते नितरामृषि — सम्मते,
श्रुतिपथे श्रुतिशास्त्र — विचक्षणः।
अपनयन् दुरितं विदुषांवरो,
दिनकरो निकरं तमसामिव ॥ ७३

विराजते ह्यार्य — परम्पराणां,
दीक्षां गतो वेद - सुसम्मतानाम्।
ऋषेर्मतेनेह पवित्रबुद्धिः,
अयं मनोहारि — विहारिलालः ॥ ७४

लग्नं यदीय - सकलं शुचि - जीवनं वै,
वेदोद्धृतौ भरतभूजनसेवनार्थम्।
रात्रिन्दिवा निगमभाष्यविधानहेतोः,
प्रायासयद् गुरुवरस्तु विहारिलालः ॥ ७५

पापप्रणाशनपटुः प्रवरः प्रधीनाम्,
ज्ञाता समग्रविमलश्रुति - सन्निधीनाम्।
ध्याता प्रबोधनघनोऽध्वर-संविधीनाम्,
वर्यो बुधां विजयतां तु विहारिलालः ॥ ७६

बाल्ये विनोद - समधीत - समस्तशास्त्र -
पाण्डित्य - मण्डितमतिः सुमतिर्वरेण्यः ।
तर्कोऽक्षपादिव दिवः समवातरत् किम् ,
जेतुं विपक्षमथ कोऽपि विहारिलालः ॥ ७७

वाचांपतिर्दिविषदां तु गुरुः स्वयं किं ,
कारुण्य- भाव-परि-पूरित-मानसोऽयम् ।
ध्यात्वा व्यथां विमलवेदपराङ्मुखानाम् ,
पुंसां दधौ जनुरयं तु विहारिलालः ॥ ७८

यो यौवनं न्वगमयन्निगमागमानाम् ,
नक्तंदिवा खलु विचार - परम्पराणाम् ।
आचारवानविरतं भुवि सम्प्रचारे ,
सोऽयं सदा विजयतां नु विहारिलालः ॥ ७९

सुप्रेम - पावन - पर- प्रतिभा- प्रतीकः ,
भव्यानु- भाव- परि- भूषित- शेमुषीकः ।
ध्येयानुराधन- धनैर्धुरि धारणीयः ,
संराजतां नु सुधियां हृदयासनेऽयम् ॥ ८०

चेतः प्रसीदतितरां भवतां स्मरन् वै ,
संलापनं प्रणयगर्भगिरागभीरम् ।
को वा जनो न मनुतां स्वकमेव धन्यम् ,
लब्ध्वा विदग्ध ! अघमर्षण-दर्शनन्ते ॥ ८१

तर्कार्क- रश्मि- शर- कर्कश- सम्प्रहारैः ,
पौराणिकाल्पमति-सम्भव-जन्मनस्तान् ।
यश्चावतार- परिकल्पित- कृष्ण- सान्द्र -
मेघव्रजानविरतं समुदच्छिनद्धि ॥ ८२

विद्वद्वरैर्यदभिनन्दन — भावनाभिः ,
श्री वैद्यनाथ- हरिदत्त जि- पण्डिताग्रैः ।
प्रायः प्रशंसनमकारि सुयोग्यतायाः ,
शास्त्रानुलोचन — पटोर्वचनामृतस्य ॥ ८३

योऽस्याश्शृणोत् सुकवि-वाग्मिवरस्य वाणीम्,
ओजस्विनीं सकृदपि प्रविमुग्धचेताः
पर्यालुलोच तु कदापि सुलेखमालाम्,
बुद्धि - प्रशस्ति - यशसां वरगायकोऽभूत् ॥ ८४

श्रीमान् प्रकाश-परिकल्पित-पूर्व वीरः,
आर्याग्रणीः शिवकुमार - महोदयोऽपि ।
वेदानुशीलन - वरेण्य — मनीषिणस्ते,
एतान् प्रशस्ति - वचनैरभिनन्दयन्ते ॥ ८५

हर्ष - प्रकर्ष - रसवर्षणशील - शास्त्र —
पीयूष - पावन - सुबोध- मधु- प्रवाहम् ।
के वा न जग्मुरलमाशुनिपीय तृप्तिम्,
वागापगास्रुतजलं विमलं त्वदीयम् ॥ ८६

पस्पर्धिरे ननु निशम्य सुरा न के वा,
चन्द्रावदात - शुचि-हृद्य - गुणावलीं ते ।
अज्ञान - घोर - तमसान्ध - हृदन्तरे तु,
ज्ञानेन्दु-दीधिति-रुचिं समवाकिरन्तीम् ॥ ८७

लोकस्थितिं द्रढयितुं समुदारभावाः,
प्रायो भवादृशजनाः समयेऽप्यतीते ।
जाताः परोपकरणार्पित - सर्वसम्पद् -
स्वाध्याय- याजन-शुचि-व्रत शालिनस्ते ॥ ८८

नेहन्तेऽनृत - वर्त्मना क्वचिदपि प्राप्तुं सुखं भौतिकम्,
धीराः सज्जन - पक्ष - रक्षण - विधौ सङ्कल्पवन्तोऽभयाः ।
सोढ्वा दुःख - परम्परामपि सदा सद्वर्त्म नोज्झन्ति ते,
निर्लोभा गतमत्सराः सुकृतिनस्तेष्वेव लोकस्थितिः ॥ ८९

अज्ञाते गिरिकन्दरा – वनभुवः प्रान्ते स्वयंभूरुहाम्,
छायायाम् तरुवीरुधां गमयतां श्रान्तिं तनूजां क्वचित् ।
योगानुष्ठितदीप्ति - दग्धदुरिताः दिव्या समाधिस्थिताः,
वन्द्या ये मदमान - काम - रहितास्तेष्वेव लोकस्थितिः ॥ ९०

रामारामनिराम - वृत्तिवरदे सुब्रह्मचर्ये स्थिताः,
लोकाराधन - साधन — श्रुतिपथान्नो वा पदं प्रच्युताः ।
आनन्दाऽमृतवर्द्धिणः सुधिषणाः जातोदया वारिदाः,
शंकर्त्तुं जगतां विपत्तिहरणं तेष्वेव लोकस्थितिः ॥ ६१

सन्ध्योपासन- निष्ठया जितमनः - प्रभृतीन्द्रियाः साधवः,
हव्यैराहुत - वह्नयश्च पितरः कव्यैः समाराधिताः ।
आतिथ्येन तु सत्कृताः अतिथयो यैर्वैश्वदेवैरपि,
स्वाध्यायार्चित - पञ्चयज्ञ-चरितास्तेष्वेव लोकस्थितिः ॥ ६२

सूर्ये वैदिक — संस्कृतेः समुदितेऽरुद्धा विशुद्ध - प्रभा,
प्राचीमञ्चति काञ्चन प्रतिभया स्रोतस्विनी वैदिकी ।
निद्रामुद्रितलोचना कमलिनी सद्यो विकासं गता,
घूका दुर्मतयो त्यजन् घुघुकृति लीना रजन्यां क्वचित् ॥ ६३

दम्भं यो दाम त्यजस्रमखिलं शास्त्रार्थ - चिन्ताऽऽहवे,
मिथ्याऽडम्बरलेख — भाषण - पटोः श्रीमाधवस्याञ्जसा ।
नित्यं राष्ट्र-सु-जाति-रक्ष- प्रवला चिन्ता दहेद्यन्मनः,
जीव्याद् वेद-सुभक्तिमान् स मतिमान् तन्वन् मतं वैदिकम् ॥ ६४

वेदोद्यान - सुगन्धवोध - सुमनो - धूलीलसद् - विग्रहो,
विश्वं विश्रुत - गुञ्जनैर्निनदयन् काव्यात्म - सूक्तैर्नवैः ।
विद्वन्मण्डलमण्डनो मधुकरः कोऽप्येष नूत्नो मुहुः,
जीव्याद् वर्ष शतं मुनीश्वरमतं राद्धान्तमामण्डयन् ॥ ६५

सद्विद्या-गुण- गुम्फितां सुविमलां संसूक्ति-मुक्ता-फलाम्,
आर्ष - ज्ञान -विभूषिते स्रजमिमां वक्षः - स्थले धारयन् ।
वेदज्ञान — दिवाकरांशु - निकरैर्ध्वान्तं ततं ध्वंसयन्,
पाखण्डं भुवि खण्डयन् रमयतां स्वान्तं सुधीः सर्वदा ॥ ६६

भ्रान्तिध्वान्त- निदारण- क्षम - बहु-प्रज्ञा- प्रभा- भास्वराः,
गम्भीराऽध्ययन — प्रभेदमगमन् गुर्व्यों गिरां - ग्रन्थयः ।
काव्यव्याकृति-नीति शास्त्रप्रणयेऽप्यव्याहतज्ञप्तयः,
वेदानामुदतूतुलन् भुवि भृशं कीर्तिध्वजं भाषणैः ॥ ६७

धर्मोत्साहनदाः सदाशयमुदा सम्बर्धना वाग्धनाः,
मानाऽमानसमा मतावनुपमा वाचाकला - वित्तमाः।
येऽज्ञानाऽब्धि-निमज्जितान् खलु जनान् वाक्सेतुनाऽतारयन्,
तेभ्यो मूर्धगताञ्जलीभिरसकृत् सद्भ्यो गुरुभ्यो नमः ॥ ९८

राधेश्यामः कथानां प्रवचन चतुरश्चन्द्रनारायणोऽपि,
अस्याऽयोध्या प्रसादः सहृदय सुहृदो मान्यमैत्रीं प्रपन्नाः।
सल्लीला संविलासैरधिगत विभवस्यास्य सत्कीर्तिगाथाम्,
गायन्तो मोदमापुः प्रकटित परमानन्द-भाव-प्रभावम् ॥ ९९

दुर्भाग्येन सुधा - सरोवर - जलाद् हालाहलं ह्युद्गतम्,
क्षीरोदन्वति पातितं कुविधिना काञ्जी-प्रवाहः कथम्?
सर्वानन्द - ससुद् भवस्य समये हा पातकं घातकम्,
"आयन्त्येव महत्सु दीर्घ विपदश्चानन्द- सङ्- घातकाः" ॥ १००

साम्राज्यं वेदनाया यदुरसि सततं चाऽप्यखण्डं विशालम्,
मस्तिष्कं वाऽन्धवात्या भ्रमयति नितरांचाश्रुमालाजस्रम्।
सम्मार्ष्टुं मार्गयन्ती दयितमपि रहो हा निरानन्दभाग्या,
हा हा! दुर्भाग्यरेखा व्यथयति कतमाम्लान-भासा प्रभा सा ॥ १०१

सत्यं नश्वर - संसारे, धर्म एको हि निश्चलः,
साकं जीवेन यात्येव, तस्माद् धर्म - परो भव।
इत्येवं मन्यमानो वै कथानायक एष नः,
असक्तो ह्यनभिष्वङ्गः कर्त्तव्यं कुरुते यभी ॥ १०२

सूनूराजीवनेत्रो विनय नययुत्तो राजतां वाऽरविन्दो,
यद्भार्याऽर्या 'सुशीला' रुचित गुण तनूजा 'जया नीरजा'ऽपि।
जामाता यस्य नित्यं विलसतु नितरां स्वोन्नतीनां विलासैः
पुत्रीकुर्वन् रमेशं जयतु शतमितं शारदं सुप्रसन्नः ॥ १०३

दयानन्दस्याढ्ये श्रुति - मत - पथे प्रीति - जनकान्,
विशुद्धान् राद्धान्तान् उपदिशदिदं तर्क निकषे।
परीक्षा - संसिद्धान् अहरह इमान् बान्धव युतः,
सभार्यो वार्यो वै विमल — चरितं संविमृशतु ॥ १०४

परां श्रद्धामीशे विमल - चरिते व्याप्तजगति,
परे रम्ये संसृष्ट्यवन — विलयाधार — शरणे।
सदैवाऽधत्तेऽयं विमल विमल मतिमान् पुण्यचरितः,
गुरूणां चारित्र्यस्मृतिरपि तु भद्रं वितनुते ॥ १०५

भव्या भारत भूमिराशु भुवि मे धान्यादि — सम्पन्नताम्,
यायात्, आर्त्तंजनो न कश्चिदखिले भूमण्डले दृश्यताम्।
सर्वे वैदिक - धर्म - मर्म - सुविदो भूयासुराढ्या द्विजाः,
नित्यं—याजन धूम्रराशिभिरलं नीलं नभो राजताम् ॥ १०६

— शमित्योम् —

— × —

सङ्कल्प मात्र से जिसके, संस्कृति का दीप जला है,
लीला विलास की भूमि, फैली यह वसुन्धरा है।
जिसका मधु पीने नित नभ, प्रमुदित यह चन्द्र सुधा है,
उस ब्रह्मध्यान की महिमा में, प्रस्तुत दिव्य गिरा है॥

जननी - पितु - पद - कमलों का, पावन पराग नयनों में,
माधुर्य उसी वाणी का, रस भर कर निज वयनों में।
बहु - कलुष- राशि के नाशक, पादाम्बुज को संस्मृत कर,
पहले मन पावन कर लूँ, वात्सल्य जलधि में घुसकर॥

संसृति के गहरे सागर, के उस तट तक पहुंचा दो,
मां अपने करुणांचल को, मेरी पतवार बना दो।
जिनकी मैत्री को पाकर, भैषज्य विज्ञ पितु मेरे.
जिनकी चर्चा में वाणी, देती रहती है फेरे॥

उन वैदिक धर्म पुजारी, का चरित - कीर्तन कर लूं,
मानस - झोली मङ्गलमय, चारित्र्य - रत्न से भर लूँ।
हे वन्दनीय—पितु निर्मल, मतिवाली बधू तुम्हारी.
शुचि-चरण-रजः-स्मृति-नाशित सब कलुप आत्मज भी यह॥

आदेश पालने हित ही, सुर राधित संस्कृत वाणी,
बच्चों कि मातृ भाषा बन, बन गई आज कल्याणी।

उस अमर गिरा में मन को, सन्तोष अमित मिलता है,
आनृण्य प्राप्ति की इच्छा, में मन - सरोज खिलता है।
वाणी भूषण का धन जो, निर्लोभ वृत्ति हैं रखते,
जिन चरितों के शुचि गाने, श्रवणों में अमृत बरसते॥

विद्वद्वर लाल बिहारी, श्रीमान् गुणों के सागर,
उनके गुण बिन्दु - कणों से, मैं भरता मन की गागर।
श्रद्धेय - पितृ - पादाम्बुज, मम पावन परम मनोहर,
दो शक्ति गा सकूँ वाणी, मन प्रीति प्रदायक यशवर॥

श्रीमद् विहारि मन भावन, का पावन चरित सुनाते,
सुरभित भावों के संचित, कुछ श्रद्धा सुमन चढ़ाते।
युग युग से अरमानों की इक सरिता सी बहती थी,
गुरुवर का चरित वखानूं, यह रह रह कर कहती थी।।

भरद्वाज तपस्वी ऋषि के, गोत्रज द्विज पुंगव पावन,
अयोध्या प्रसाद श्री मण्डित, गौडीय विप्र मन भावन।
सम्भूत मुरादाबादी, मण्डलगत 'पागवड़ा' में,
विख्यात यशस्वी मतिमान्, जाये थे वसुन्धरा में।।

उनकी गृहणी सतवन्ती, थीं धर्म परायण धीरा,
प्राचीन आर्य मर्यादा प्रतिमूर्ति सरल शुचि शीला।
कारुण्य - जलधि ब्रह्मा से, उसने माँगा अभिलाषित,
वर,सद् गुण सुत श्रुति पारग, निर्मल यश सुरभि सुवासित।।

ब्रह्मा 'तथास्तु' वाणी में, बोले हे साध्वि तुम्हारी,
कामना - पूर्ति सुखकर हो, ऐसी आशीष हमारी।
पाखण्ड खण्ड करने को, मण्डित कर वसुधा सारी,
आचारावलि ऋषियों की, फैलाये शुचि आचारी।।

विक्रम १६ सैंतालिस, शुभ शुक्ल पक्ष तृतीया के,
शुभ ज्येष्ठ मास में जन्मे, शुचि चन्द्र यथा द्वितीया के।
मुनि की प्रणीत पद्धति के, उद्धारणार्थ यह बालक,
माता पितु पुण्य तरू के, पुष्पित हो शुभ फलदायक।।

सब दिशा प्रसन्न विमल हैं, सुखदातृ समीरण बहता,
आनन्दामृत - वारिधि में, मन कभी डूबता तरता।
उस दिवस पिता का मां का, केवल न भाग था जागा,
सौभागी जन जन मन थे, तब था ही कौन अभागा?

वनचारी पशु वृन्दों के, मूर्धन्य देश पर जैसे,
केसरी सुशोभित होता, शास्त्रज्ञ शिरोमणि वैसे।
विहरें सवके ये मन में, श्रुति प्रवचन से लालन कर,
शुभ नाम विहारी लालम्, हो अर्थवान पालन कर।।

जननी अरु जनक मनोरथ, के साथ साथ शिशु वर्धन,
वर्धन के साथ मुदामय, आशा बल्लरि का नर्तन।
बल्लरि के साथ मनों के, शुचि भाव सुमन थे फूले,
फूलों के साथ सरस्वति — उद्यान सुफल थे झूले।।

तब नैसर्गिक संस्कृति के, शुभ गुण विकास पाते थे,
नव नवोन्मेष प्रतिभा के, पुनि पुञ्ज विखर जाते थे।
यों 'छेदीलाल' सुधी ने, बालक में गुण गुण देखा,
सुरवाणी के पढ़ने की, खिंच गई प्रेरणा रेखा।।

इन पण्डित पूज्य पिता ने, श्रीमान् लोक नारायण,
पाकर कुशाग्र मति बालक, माना स्वभाग्य - पारायण।
गुरु वन्दनीय पद पंकज, रस मधुप व्रती मन मीता,
पढ़ शीघ्र बोध सारस्वत, चन्द्रिका चकोर ज्यों पीता।।

सद् भाष्यसु परिचय अवसर, श्री वैद्यनाथ पण्डित से,
सुस्निग्ध कृपा - वत्सलता, प्रतिभा प्रकाण्ड मण्डित से।
पा 'जवाहराभिध' देवी, वाणी के विद्यालय में,
लेकर प्रवेश, सहपाठी, सबको लांघा मति जय से।।

व्याकरण काव्यमय उनके, चरणाम्बुज स्तुत मधु पीकर,
यह मधुप तृप्त होता था, अभिनव संजीवन पीकर।
प्रथमोत्तीर्ण करते ही, सम्भल के विद्यालय में,
अध्यापक वरद वृहस्पति, ज्यों आये देवालय में।।

शास्त्रार्थ महारण पण्डित, शिव शर्मा सुकृती जन से,
सत्सङ्ग प्राप्त कर सुन्दर, जिज्ञासा पूरण मन से।
उन देव दयानिधि ऋषिवर, श्री दयानन्द के मग से,
संकल्प लिया चलने का, पाखण्ड नाश कर जग से।।

श्रुति - द्वेष - घनान्धतमिस्त्रावृत मति चालित कुप्रथा से,
शास्त्रानुकूल - तर्कों के, कर्कश शर छेद उड़ायें।
ऋषियों की प्रतिभा सम्मत, जो दयानन्द की सरणी,
शुचि वैदिक बोध विनिर्मित, सुस्मृति - वैतरणी तरणी।।

चल धर्म मार्ग, निष्कलमष, भारती भूमि हो जावे,
देवार्चित विमल, धरा से, पाखण्ड नष्ट हो जावे।
इस लिए लेख संस्कृति के, पोषक, दुर्मति के घालक,
प्रवचन पटु कला कलित बहु, व्याख्यान दिये श्रुति पालक ॥

वक्तृत्व कला-कोविद से, वंशीधर पाठक पण्डित,
इस रत्न कृती को पाकर, कृत-कृत्य हो गये मण्डित।
उत्साह उदधि को बाँधे, धर्म व्रत-मन सृ कलश में,
सङ्कल्प कठोर लिया तब, इन्द्रिय-गण को कर वश में ॥

वैदिक प्रचार का व्रत ले, मुस्लिम-मत विद्यालय में,
शिक्षक अरु धर्म प्रचारक, बन गये किशोरक वय में।
मतवालों से फिर जूझे, सुकृती प्रणवान् धुरन्धर,
शास्त्रार्थ मंच की शोभा, ने जीते समर भयङ्कर ॥

घन अन्धकार-नाशक रवि, स्वर्णिम आभा को लेकर,
गिरि-श्रृङ्ग उदित होता ज्यों, खग कुल को जीवन देकर।
शुभ वर्ण दीप्त, कष घर्षण-तेजित तर्कों के शर से,
ज्यों जन मोदन, तम नाशन, होता वैदिक-रवि-कर से ॥

उत्साह आर्य जनता का, आमोद प्रमोद बढ़ाये,
सम्मान्य निरीक्षक पद पर, श्रीमान बरेली आये।
आर्यानुरोध से फिर ये, सुसराय तरीन पधारे,
सब विपद्-व्यूह वरने को, आये धर्मव्रत धारे ॥

शङ्कर ने बहुत सही थी, धर्म प्रचार में पीडा,
सामोद गरल पी जाना, ऋषि ने समझी थी क्रीडा।
उस श्रद्धानन्द यती ने, प्रिय प्राणों को दे डाला,
जब लेखराम पण्डित ने, धर्मार्थ मृत्यु को पाला ॥

अश्फाक, भगत, बिस्मिल ने, कष्टों का वरण किया था,
सबने फांसी की रस्सी, को हंस कर चूम लिया था।
मां के बन्धन कटने का, यह सरल मार्ग था जाना,
विपदा में अविचल रहते, सब धीर पुरुष था माना ॥

उन्नीस नवम्बर चौदह (१९१४) सन् को समाज मन्दिर में
दुर्दान्त - मदान्ध - यवन जन, ने शस्त्रों को ले कर में।
आक्रमण भयंकर करके, अल्लाह हो अकबर' नारा,
श्री शास्त्रि महोदय पर था, प्राणान्तक किया प्रहारा ॥

फिर इनको मरा समझकर, सहसा वे भाग उठे थे,
दैवेन कथञ्चित् रक्षित, ही पाये प्राण नये थे।
जा देखो वन स्थली में, तरुतति नव-पल्लव होता,
जिसका न नाथ कोई है, उसका रक्षक है सविता ॥

फिर आर्य मुसाफिर विद्या,-लय में आगरे पधारे,
विजनौर आर्य समिती में, कर्मठ प्रचार व्रत धारे।
सह भोजन, कूप चढ़ाना वर्जित अछूत जन का था,
द्विज जन को सहमत करके, इनके अभीष्ट मन को था ॥

प्रिय शिष्य योग्य इनके थे, सुखलाल कुँवर थे गायक,
थे अद्वितीय प्रतिभा में, वक्तृत्य कला के नायक।
कल कोकिल कण्ठ सुरीले; जनता मोहित थी होती,
'सत् पात्र समर्पित विद्या, फलवती सदा है होती ॥

जिन पादाम्बुज की सेवा में, ज्ञान दीक्षित होकर,
वेद-स्मृति निर्मल जल से, कालुष्य चित्त का धोकर।
वे प्रेमानन्द सरस्वती, बन गये योग्य सन्यासी,
' वर्मा ' में जा तर्पित की, जनता वेदामृत — प्यासी ॥

इन बन्दनीय गुरुवर के, शिष्याग्रय 'अमर स्वामी' हैं,
शास्त्रीय अरण्य-विहारी, वे अमर सिंह नामी हैं।
विस्तृत पुराण निगमागम, शङ्कोदधि तरते ऐसे,
उस मनु के खण्ड प्रलय में, वह मत्स्यतरा था जैसे ॥

पण्डित अग्रिम श्रेणी को, संभूषित करने वाले,
इन शिष्य वर्ग में मैं तो, ज्ञानाम्बुधि तीर विशाले।
लहरों से संचित मुक्ता,-गण छोड़, प्रतीक्षा में रत,
सीपियां अंक में भरकर, आ वैठा हूं मैं हतमति ॥

उस बीर हुतात्मा श्रद्धा, नन्दीय मार्ग में चलकर,
हिन्दू रक्षण का व्रत ले, शुद्धयादोलन का प्रण कर।
सुख त्याग सहस कष्टों को, है जीवन साथी माना,
वस एक लक्ष्य था इनका, म्लेच्छों को आर्य बनाना ॥

श्रुतिमत के विस्तारण की, पूजा में लगे निरन्तर,
धर्म प्रचार - निष्ठा में, सन्तुष्ट हुआ था अन्तर।
इस 'उभयानी' नगरी में, फिर चौबीस वर्ष विताये,
इस बीच सुशील सहस्रों, विद्या दे शिष्य बनाये।

शास्त्रार्थ - समर में अगणित, प्रतिभट विद्वान् पधारे,
जो शास्त्रारण्य विहारी, दुर्दान्त — दर्प को धारे।
पौराणिक — पंक फँसे गज, बुध — मद के मर्दन कारी,
नहिं फेरु—शब्द पर केसरी, मेघानु नाद हुंकारे ॥

जब हिन्दू जाति मुमूर्षू, हो रही वेद शिक्षा विन,
तव दिव्यलोक से ऋषिवर, लाये वेदामृत जीवन।
ऐसे श्रुति भक्त जनों पर, निज भार समर्पित करके,
वापस द्यौ लोक गये वे, जातीं में जीवन भरके ॥

श्री मुरारी लाल ऋषि अनुचर, श्री वासुदेव जी पण्डित,
वे राम दयालु सुधीवर, राम स्वरूप से मण्डित।
श्री नन्द किशोर तनय वे, श्री रामदत्त जी न्यारे,
सद विप्र वंश भूषण वे, ऋषि भक्त शिरोमणि सारे ॥

वे ज्ञान-दीक्षित ऋषिवर, के श्रद्धा - सुधा नहाये,
सद् वन्दन से अभिनन्दित. वैदिक सिद्धांत सुहाये।
स्वाध्याय, होम - विधि, जय से, सम्पूत स्वान्त कोविदवर,
बानवै वर्ष की वय में, उत्साह प्रचार प्रवल धर ॥

जीवन की दिनचर्या में, स्वाध्याय अनवरत करते,
शंका — समाधि की नेतर, के दोनों ही प्रान्त पकड़ते।
संकल्प - मन्दराचल से, वैदिक - रत्नाकर - मन्थन,
शिक्षा के रत्न समुच्चय, चुनते अजस्रकर चिन्तन ॥

श्रुति चिन्तन अभ्यासी ये, सेवा का शुचि व्रत धारे।
रत्नि धर्म जागरण करके, निज पतित - पुंज उद्धारे।
प्रस्फूर्ति मान नव युव सम, इस वृद्ध अवस्था में भी।
वेदोद्धारण की निष्ठा, प्रतिपल बढ़ती आगे ही॥

शास्त्रार्थों के समर थल में, वेद द्वेषी विपक्षी।
विद्वान योद्धा लखकर महोत्साह होता जिन्हें है।
आर्यों के ये परम सुकृती, दर्शनानन्द जैसे।
जो बाणों की निशित प्रतिभा तर्क के छोड़ते हैं।

ईसा मूसा कुमति मत के औ किरानी कुरानी।
भैरों देवी जड़मति सभी शीतला के पुजारी।
वेदों पर तो निशि दिवस है फेंकते धूलि राशि।
शास्त्रार्थों में जिताकर उन्हें, मार्ग सच्चा दिखाते॥

दैवी वाणी अमृत मधु की जो सरित हैं बहाते।
विद्वान् - वेद - प्रणिहित मती शास्त्र मर्मज्ञ हैं जो।
आगे आते सभय जिनके कांपते हैं विपक्षी।
पूजा भागी विमल - यश के आर्य संसार के हैं॥

गीर्वाणी की शुचिवर — गिरा के बड़े जो धनी हैं।
वाणी से जो मधुमय — सुधावारि बरसा रहे हैं।
शास्त्रों के जो परम विद हैं वेद मर्मज्ञ भी हैं।
मेधा जिनकी विमल – गुण से मण्डिता हो रही है॥

दुर्मानी औ कुमति मत मय माधवाचार्य के भी।
शास्त्रार्थों में डटकर सदा हौसले तोड़ते हैं।
भाधौ क्रोष्टा लखकर जिन्हें केसरी मान डरते।
आर्यों के वे गुरुवर रहे सर्व कल्याण कारी॥

सुरवाणी की पठन - रति से पाविता भाविता हो,
शास्त्रों की भी विधि औ निषेधी समालोचना से।
व्यवहारों में परम पटु ये और सौन्दर्य शाली,
स्वाध्यायों से परम विमला बुद्धि से धारते जो॥

शतपथ मुखायते से, प्रतिमा — पूजन दरसाते,
गुण जड—पूजा के कहकर, माधव जो नहीं अघाते।
पर नहीं विचारा उन ने, है यहां अलङ्कृति भारी,
प्रकरण भी देखो फिर से, जो है विवेक अनुसारी।।

श्रुति मन्त्रों के रूपक में, यों आती विभु की अर्चा,
द्यौ लोक शिरस्थानी है नभ - उदर चरण - भू चर्चा।
जो कण कण में व्यापक है, निरवयव अमूर्त्त अनादि,
कैसे सम्भव हो उसकी, प्रतिमा सावयवा आदि।।

यों प्रखर तर्क वाणों की, उज्जवल-किरणों से अविरत,
माधव - सम्मत - पौराणिक, तम - राशि नाशते सन्तत।
इन विद्वद्वर की आगे, हम जीवन — कथा सुनाते,
प्रवचन मधुधारा पीकर, गुणग्राही नहीं अघाते।।

श्रुत्याराधक प्रखर मति वे थे बदायूं नगर में;
माधौ जी ने विनत सिर से की क्षमा याचना थी।
सिद्धांतों के विजय - रव की दुन्दुभी भी बजी थी,
शास्त्री जी ने सुविजित किया माधवाचार्य जी को।।

ऊँचे - ऊँचे शिखर गिरि के, भेक भी लांघ जावें,
चीटीं चूमे गगन चढ़ के चन्द्रमा बिम्ब को भी।
बैठें फेरू यदपि चढ़ के राज्य सिंहासनों पै,
गंगा कीर्ती विमल अतुला घाघरा को मिले भी।।

मत्ता भेकी लघु स्वपद में, नाल चाहे गढ़ावे,
छोटी काया पर सह सके, चोट भारी घनों की।
गङ्गू तेली यश नरपती, भोज का भी लहे जो,
गम्भीराम्भोनिधि क्षुभित हो, शूकरी लोटने से।।

ढाकों के वे कुसुम - सुरभी धारले पाटला की,
कुल्या भी तो अभिनय करे, अब्धि गम्भीरता की।
कोई भी है अचरज नहीं, ये सभी काम होवें,
माधौ जी जो अचरज महा, बाद को सामने हों।।

अति प्रकोपित माधव मालियां, ऋषि विनिंदक हो बहु दे रहे।
तव समीप न गालि कला निधे, रह सकी शुचि-शब्द-पदावली ॥

कलिमलाकुल कुण्ठित कौशला, तव कला कुटिलाऽखिल वक्तृता।
कुटिलता तज दो जरदायु में, ऋषिवरानुचरी अब तो बनो ॥

लघुमते ! प्रतिमा परिमेय की जगत में बनती, न अमेय की।
पशुबली लघु बुद्धि करें सदा, हवन में श्रुति से विपरीत हो ॥

श्रुति नहीं कहती प्रतिमार्चन, नहि विचक्षण सम्मत है कभी।
इसलिए जड पूजन छोड़के, सकल विश्वरमें प्रभु को भजो ॥

सुरगिरा गरिमाऽगरु गन्ध से, श्रुति - सुधा रसधार प्रवाह से।
लसित है ऋषि की चरितावली, तुम वही कलगान किया करो ॥

बहुत - पंक - कलङ्क भरी हुई, श्रुति विरुद्ध पुराण मतान्धता।
इसलिए तुम आत्म विशुद्धि का, शुभविनि श्चय भी अब तो करो ॥

दशरथात्मज, केस — विषूदन, प्रथित पूज्य सनातन धर्म के।
परम पूज्य हमें उससे अधिक, पर न वे पुरुरवा अवतार थे ॥

कलुष - वृति पुराण प्रसंग के, परशु से न सनातन धर्म के।
तरुण पादप को तुम काट दो, सुफल वेद प्रचार करो सदा ॥

प्रिय ! नहीं प्रतिमा हम पूजते, यवनवत प्रतिमा नहीं तोड़ते।
पर विचार करो 'अज' की कभी, बन नहीं सकती प्रतिमूर्ति है ॥

क्षुर उपानह की परिपूजना, हम नहीं कहते करते कभी।
उभय कोजु विधान समान फिर, स्वमुख पै जड़ते स्पचेपटिका ॥

फिर विचार करो प्रिय माधव, क्षुर, उपानह है प्रतिमूर्ति क्या ?
उचित आदर की यह सूचना, न प्रतिमार्चन गन्ध यहाँ कहीं ॥

बहु विवाद बड़े अघ ओघ के, घन - समावृत व्योम हुआ तभी।
श्रुति विरोधक ईदृश राहु से, ग्रसित था श्रुति का शुभ सूर्य भी ॥

बहुत से ध्वनि लक्षण से सजे, ऋषि - सुसम्मत उद्धरणों लसे।
निगम के शुचि मान्य प्रमाण से, परम तुष्ट किया गुरुवर्य ने ॥

गगन था तव दर्शक वृन्द के, जय सुघोष प्रगुंजित हो चला।
धवल - कीर्ति प्रघोषक शब्द से, सब बधिरीकृत हो गयीं ॥

दुर्वृत विनाश को भी, स्पर्लोक त्यागे भुवि आ गये ये।
शास्त्रज्ञ विद्वद्वर यों करेंगे, 'वेद प्रचारम्' अब मानवों में ।।

ऋषि - सुसम्मत - वैदिक मार्ग में, बिहरते हरते पर पीर ये।
रवि समान अबोध - तमस्तती, निशि दिवा परिछेदन दक्ष है ।।

पुरानी वेद मर्यादा — सुरक्षक — मधुर वाणी से।
मनोहारी बिहारी लाल विद्वद्वर सुशोभित हैं ।।

भरत भू-जन की सेवा में, निरत जिनका सफल जीवन।
उन्हीं की कीर्ति गाथा परम पावन गा रहा हूं मैं ।।

सुधीवर ज्ञान निधि साधे, विपुल अज्ञान छेदन को।
निरन्तर यज्ञ विधि उपदेष्टा की जय विजय होवे ।।

जिन्होंने बालपन में शास्त्र सारे पढ़ लिए थे वे।
बृहस्पति स्वर्ग से मानो विपक्षी जीतने आये ।।

अमर उस लोक से वाचस्पती कारुण्य भावों से।
अमल श्रुति से पराङ्मुख मनुज को श्रुति की सुधा लाये ।।

जिन्होंने निगम - आगम — चारुचर्चा की दिवानिश हैं।
विमल - आचार - गंगा के भगीरथ की सदा जय हो ।।

बिशद — भावाऽनुभावित — शेसुषी — धनी जो हैं।
वही विद्वद्वरों के हृदय—आसन पर सदा राजें ।।

— — —

संलाप प्रेम परिपूर्ण गम्भीर वाणी, को चित्त याद करके सुप्रसन्न होता,
है कौन जो न निज को बहुधन्य माने, पाके बिदग्ध अधमर्षण दर्शनों को।
तर्कार्क-रश्मि-शर-कर्कश धार से जो, पौराण कल्पित कथा अवतार रूपी,
काले कराल नव नीरद राशि को जो, है छिन्न भिन्न करते निगमागमज्ञ।
सम्पूजनीय अभिनन्दन भावना से, श्री वैद्यनाथ हरिदत्त सुपण्डिताग्र,
शास्त्रानुलोचन प्रवीण कुशाग्रधीका गाते प्रशंसन सदा, न कभी अघाते।
वाणी बिभूषण विमुग्धकरी सुवाणी, ओजस्विनी सुन प्रमुग्धमना सदैव,
आर्याग्रणी कर रहे शुभगान जिनकी, कीर्ति प्रमोदन करी शुचि तजती हैं।
श्रीमान् प्रकाश वीराग्रज धीरधी भी, आर्याग्रणी शिवकुमार विचक्षणों ने,
वेदानुशीलन स्वभाव सदा बखाना, वे कीर्तिधाम किसके न नमस्य होंगे।

शास्त्रानुलोचन रसाम्बुद की सुवर्षा, से तृप्त कौन नहिं मानव हो सकेंगे,
वाणी सदैव अमृत द्रवशील सौम्या, आये सुकल्प तरु से यह तारने को।

अज्ञान घोर तमसावृत मानवों में, ज्ञानेन्दु रश्मि रमणीय प्रकाशकारी,
चन्द्रोज्ज्वला निरुपमान, गुणावली की, स्पर्धा न कौन सुनके करते सुदेव।

स्वाध्याय-याजन-शुचिव्रत शालि विद्वान्, प्राय: परोपकर जीवन ध्येय वाले,
पैदा हुए सुदृढ़ लोक सँभालने को, जैसे कि आप दृढ़ हैं व्रत पालने को।

— — —

कोई भी तो अनृत पथ से भौतिकी शान्ति पाना,
चाहेगा क्या विपुल सुख को सत्य सङ्कल्प शाली।
दु:खों को भी सहन करके धीर सन्मार्ग जाते,
निर्लोभी वे सुकृति जन हैं लोक मर्याद—कारी॥

कान्तारों में गिरि वसुधरा कन्दरों में स्वयं भु—
बल्ली गुल्मों अरु तरुतले श्रान्ति को हैं मिटाते।
योगाग्नी में दुरितचय को नित्य जो हैं जलाते,
निष्कामी वे सकल—वसुधा लोक मर्याद—कारी॥

रामाऽऽराती नहि, तपधनी ब्रह्मचारी अखण्डी,
धर्म ध्यानी श्रुति पथगमी लोक कल्याण कारी।
आनन्दों के जलद करुणा—वारि वरसा रहे जो,
कल्याणी वे सकल जग के लोक मर्याद—धारी॥

सन्ध्या निष्ठा—जित मनयती साधु सर्वोपकारी,
हव्यों से जो हुतवह सदा, कव्य से पितृ तृप्ति।
आराधे जो अतिथि जन को वैश्व—देव व्रती वे,
स्वाध्यायी हैं सुयजन व्रती लोक मर्यादहेतु॥

वैदिक संस्कृति का सूर्योदय, अनिरुद्ध प्रभा जागी विशुद्ध,
प्राची को कनकमयी आभा अञ्चित करती वैदिकी सरित।
निद्रा मुद्रित लोचना कमलिनी अब विकास पाती सत्वर;
दुर्मति उलूक ने तजी घूक, है छिपे रजनि तम में जाकर॥

शास्त्रार्थरणों के प्राङ्गण में दम्भी मद मर्दित किये बहुत ,
मिथ्याडम्बर भाषण कर्ता माधवाचार्य का गर्व हरा।
जो नित्य राष्ट्र(हिन्दू)रक्षा चिन्ता में घुलते रहते हैं मन से,
वैदिक सिद्धांत प्रसारी वे जीवें भूयः शरदः शतात् ।।

वेदों के उद्यान - गन्ध - मय बोध - पराग लसेदेही ,
काव्यात्मक-विश्रुत गुञ्जन से; हैं विश्व गुंजाते जो अजस्र।
विद्वन्मण्डल मण्डन - मधुकर यह कोई आया है नवीन ,
ऋषि दयानन्द के भक्त प्रवर जीवें भूयः शरदः शतात् ।।

विद्या गुण गुम्फित विमल-सुक्ति-मुक्ताफल उज्ज्वल माला को ,
ये आर्य बोध – भूषित वक्षः स्थल पर जो धारण करते हैं।
वे वेद - सूर्य के रश्मि जाल से ध्वान्त भगाने आये हैं,
पाखण्ड दम्भ खण्डन करके अन्तर को जगाने आये हैं।।

भ्रम ध्वान्त निवारण में समर्थ, बहु प्रज्ञ प्रभा भासित विदग्ध ,
गम्भीर –अध्ययन — सुप्रतिष्ठ गुरुग्रन्थिगिरा गौरव गिरीश ।
व्याकरण नीति अरु काव्य शास्त्र वेदों में अप्रतिहत प्रज्ञ ,
तुमने वैदिक - प्रवचन - पटुता, से कीर्ति ध्वजा है फहराई ।।

तुम धर्मोत्साही सदाशयी मुद — संवर्धन हो वागधनी ,
मानी अपमान समानरूना वाणी भूषण अनुपम मति के।
अज्ञान – जलधि में मग्न मनुज – को वाक् सेतु से तारक हे ,
शत शत श्रद्धामय अञ्जलि नत, शतलः प्रणाम तुमको गुरुवर ।।

जो राधेश्याम कथावाचक विख्यात विश्व के हैं अभिन्न ,
चन्द्र नरायण श्री पितृ अयोध्या प्रसाद के मित्र परम्।
माता लीलामय शुचि विलास से सुधिगत विमल-कीर्तिगाथा ,
सब गाते गाते मोद परम पाते पाते आनन्द चरम ।।

दुर्भाग्य अमृत के सरवर में यह हालाहल घुल गया किन्तु ,
क्षीरोदधि में आ मिला आज काँजी का कुटिल प्रवाह हन्त ।
अखिलानंद के उद्भव क्षण में ये मातम आँसू की लड़ियां ,
सच है सुख-सीमा के क्षण में आतीं आनन्द-घातक घड़ियां ।।

साम्राज्य वेदना का उर में, छाया अखण्ड कैसी विशाल,
मस्तक की भाग्य रेख सूनी, आँसू धारा की सतत धार।
इसको पोंछे कोई प्यारा न्यारा जो मुझसे हुआ आज,
दुर्भाग्य रेख सी कौन व्यथित ? बैठी निष्प्रभ सी प्रभाहाय ॥

सच है नश्वर संसार बीच, इक धर्म अचल सी धारा है,
डूबते जीव का एक मात्र, यह धर्मज धैर्य अधारा है।
यह मान कथा नायक अपने जीवन से विरत असक्त हुए,
ममता किससे अब क्यों बांधें? यह कहकर धर्मासक्त हुए ॥

राजीव नेत्र सुत विनत-नीति, अरविन्द खिलो तुम भी खुलकर,
तनुजा-जय नीरज सुता साथ भार्या सुशील सद्गुण सुलझी।
तनया के पति विलसैं हुलसैं जीवन के सुलल्पित हासों से,
बेटा रमेश को लिये साथ जीवें चिरजीवी पाशों से॥

दयानन्दी पावें परम सुख जो वेद पथ में,
सदा ही तर्कों के निकष पर जो सिद्ध उतरें।
उन्हीं सिद्धांतों को निश दिन सदासेवन करें,
सुखी भार्या बन्धु चरित पढ़ सन्तोष भर लें॥

बढ़े श्रद्धा विमल चरिताधार विभु में,
वही जो सर्गादि वितय कर कारण जगत का।
जडार्चा निर्मूला हृदय तल में भाव उमड़ें,
जगद् भद्रावाही गुरुवर चरित्रांश पढ़के॥

भव्य - भारत भूमि जग में धान्य की सम्पन्नता,
प्राप्त कर निर्मम लुटादे सर्वहित में सम्पदा।
निखिल — वैदिक धर्म - कर्मी विप्र होवें सर्वदा,
नित्य याजन - धूम से हो नील शोभित नभ सदा॥

[ इतिशम् ]

अनुवादिका
निर्मला मिश्रा

वेदाचार्याऽपि सावित्री प्रसिद्धा वेद भारती ।

वक्तृत्व कलाभिज्ञा, सम्पादनमकारयत् ।।

पुण्यपुष्पैः समकीर्णा विशुद्धानन्द वाटिका ।

निर्मला निर्झरिणीव तां सिञ्चति सुवारिणा ।।

तस्याः पुष्पाणि संञ्चित्य मालेयं रचिता मया ।

अर्प्यते गुरवेऽर्च्याय विहारीलाल—शास्त्रिणे ।।

# स्व० पं० बिहारी लाल शास्त्री शास्त्रार्थ महारथी

का

परिचय

"पागबड़ा" इति ग्रामो मुरादाबाद मण्डले ।
जन्म भूमिरिति ख्यातो बिहारीलालशास्त्रिणः ।

मुरादाबाद से दिल्ली को जाने वाली पक्की सड़क पर ७ मील पर यह गांव है। दस (हजार) सहस्र की आबादी का कस्बा है। यहाँ छीपी लोगों का बड़ा तीर्थ है। श्री संत नामदेव जी का मन्दिर है। मन्दिर के सामने सैकड़ों वर्ष पुराना बड़ का वृक्ष है जहाँ सैकड़ों तीर्थ यात्री ठहरते हैं, शास्त्री जी गौड़ ब्राह्मण हैं त्रिगुणायत कुल भारद्वाज गोत्रीय हैं। त्रिप्रवर शुक्ल यजुर्वेदीय हैं। इनके कुल में ब्राह्मण वृति नहीं होती थी। रुपये का लेन-देन और खेती आजीविका के साधन थे। शास्त्री जी के परदादा श्री भूपाल शाह थे और दादा का नाम श्री बुद्धसेन था और पिता जी का नाम पं० अयोध्या प्रसाद था। पं० जी ने पहले लाला सोहन लाल अग्रवाल के पास बैठकर मुड़िया लिखना सीखा और मुनीम का हिसाब भी सीखा। किन्तु श्री पं० छेदालाल जी के परामर्श से इन्होंने संस्कृत पढ़ना प्रारम्भ किया, श्री पं० छेदा लाल जी ने लघु कौमुदी प्रारम्भ करायी। गांव में एक बार जवाहर संस्कृत पाठशाला मुरादाबाद के अध्यापक श्री पं० वैद्यनाथ शास्त्री पधारे और पं० जी के घर ही ठहरे। पं० जी की सेवा से वह बहुत प्रसन्न हुये और उनको अपनी पाठशाला में आ जाने को कहा, पं० जी ने डेढ़ साल यहां पढ़कर प्रथमा परीक्षा पास की इस समय इनके भोजन की सामग्री सब राजबहादुर श्री पं० द्वारिका प्रसाद जी रिटायर्ड पुलिस अधीक्षक देते रहे। जो कि सारस्वत ब्राह्मण थे। सारस्वत के ही बनाये मन्दिर में पं जी को रहने का स्थान मिला, यह मन्दिर श्री घासा सिंह कोतवाल का बनाया हुआ है। पं० जी के गुरु भी सारस्वत ब्राह्मण थे अतः पं० जी सारस्वत ब्राह्मणों के बहुत प्रशंसक रहे। ऋषि दयानन्द के गुरू पूज्य स्वामी विरजानन्द जी भी सारस्वत ब्राह्मण थे। शास्त्री जी की धर्मपत्नी श्रीमती लीलावती गम्भीर सौम्य प्रकृतिकी महिला थीं। फिर पण्डित जी ने नौकरी कर ली

और पढ़ते भी रहे काव्य तीर्थ पास करी, शास्त्री पास की आचार्य की तैयारी कर रहे थे, कि गवर्नमेण्ट का आदेश आ गया कि बिना आचार्य और एम.ए. किये हुए भी सन् ३५ से पहले के अध्यापकों को इण्टर क्लास पढ़ाने को दे दिया जाये। बस पं० जी सन् ५६ जून तक उझानी के इण्टर कालेज में पढ़ाते रहे, बीच में ४ साल तक उपदेशिकी का कार्य किया। उनके कार्य की प्रशंसा जिले के लोग आज भी करते हैं।

शेर-ए-मन्तिक पादरी ज्वाला सिंह से चाँदपुर में पण्डित जी का मुबाहसा हुआ जिसमें पादरी पूर्ण रूप से परास्त हुये, मुसलमान मौलवियों ने भी पादरी साहब की पराजय घोषित कर दी। बिजनौर में पादरी रोनाल्ड पानसन की शंका समाधान में पण्डित जी ने चुप कर दिया, पादरी लगा घिघियाने। लखनऊ में पण्डित जी के शास्त्रार्थ अनेक सनातन धर्मियों से हुए श्री प० माधवाचार्य को पूर्ण रूप से पराजित किया, माधवाचार्य ने इस शास्त्रार्थ को ऊटपटांग ढंग से छपवाया जिस पर प० जी ने छापने वाले प० जी श्री माधवाचार्य के ससुर थे, उन पर मुकदमा चलाया और वह अदालत में अपने लेख पर पाश्चाताप करके बचे। पण्डित जी ने अदालत के पूछने पर उन्हें क्षमा कर दिया।

श्री माधवाचार्य ने अपने जीवन चरित्र में बिलकुल झूठ लिखा है कि-मुकदमा खारिज हो गया, पण्डित जी ने 'दम्भ दमन' पुस्तक लिखकर माधवाचार्य के छल-कपट पूर्ण लेखों का खण्डन किया है।

तीन वर्ष तक पण्डित जी ने आर्य मुसाफिर विद्यालय आगरा में मुख्य अध्यापक का कार्य किया, यह विद्यालय उपदेशकों के निर्माण में बहुत प्रसिद्ध रहा, पूज्य श्री अमर स्वामी जी इसी विद्यालय के एक रत्न थे। इनकी योग्यता का आर्य जगत में अब कोई विद्वान नहीं है। श्री राहुल सांस्कृत्यायन भी इसी विद्यालय के विद्यार्थी रहे थे। मौलाना महेश प्रसाद हिन्दू विश्वविद्यालय के प्रोफेसर इसी विद्यालय में पढ़े थे। पण्डित रामचन्द्र आर्य मुसाफिर ने भी इसी विद्यालय में शिक्षा पायी थी। पण्डित जी ने परीक्षाओं के अतिरिक्त भी अध्ययन किया, व्याकरण श्री प० भवानी दत्त जोशी और श्रीकान्त झा से पण्डित जी ने पढ़ा। दर्शन श्री महन्त कृष्णानन्द जी से पढ़े। जैन, बौद्ध, दर्शन और शास्त्रों का ज्ञाता आर्य जगत में इनके

अतिरिक्त और कोई नहीं है।

श्री पण्डित ईश्वर चन्द्र जी जैन दर्शन के पण्डित हैं। और जैनों को पढ़ाकर आजीविका चलाते हैं। परन्तु वह उपदेशक नहीं हैं। पण्डित जी ने आजीविका तो अध्यापिकी से की और उपदेशक कार्य स्वतन्त्रता से किया जो दक्षिणा मिली वह सहज स्वीकार की। और उसको भी पुस्तक देने और विद्यार्थियों को पढ़ाने में व्यय किया।

इस समय इनके पुत्र श्री अरबिन्द लाल जी शर्मा एम. ए. एक अच्छे व्यापारी हैं। और उनके भतीजे श्री रमेश चन्द्र शर्मा 'विकट' खालसा कालेज में पढ़ाते हैं और एम.एल.सी. रहे हैं। प० जी ने वेदों पर आर्यसमाज पर हुए सभी आक्षेपों और प्रश्नों के उत्तर लिखे हैं। अब तक उनकी ३४ पुस्तकें प्रकाशित हो चुकी हैं। उनकी लिखी वेद वाणी और पशुबलि और वेद पर पढ़ने योग्य पुस्तकें हैं। वैदिक पताका में पं० माधवाचार्य के अनर्गल लेख का उत्तर दिया है। अब तक उनकी लेखनी चलती रही थी। 'ऋग वेद की रहस्य' नामक पुस्तक छपकर सब बिक चुकी हैं, अब अथर्व वेद का रहस्य पुस्तक छप चुकी है। उनकी प्रशंसा में व्याकरणाचार्य श्री विशुद्धानन्द जी ने जो पद्य लिखे हैं वह छपाये जा रहे हैं। पण्डित जी की प्रशंसा आर्य जगत के सभी विद्वान करते हैं। आर्य सभा बरेली ने उनको 'व्याख्यान वाचस्पति' उपाधि दी, और चांदी का मेडल भी। आर्य कुमार सभा और आर्य समाज बदायूं ने उनको सोने के मेडल दिये और वाणी भूषण की उपाधि भी। आर्य विद्या सभा महाविद्यालय ज्वालापुर ने उनको "सिद्धांत वाचस्पति" की उपाधि से भूषित किया। आर्य जगत ने बड़े सम्मान के साथ यत्र-तत्र अभिनन्दन किया।

पूज्य पण्डित जी अद्वितीय प्रतिभा के धनी थे। हिन्दी, संस्कृत, उर्दू में तो इनका पूर्ण अधिकार था, पारसी और अरबी के भी ज्ञाता थे। ईसाई और मुसलमान मजहबों के सिद्धान्तों के मर्मज्ञ होने के कारण शास्त्रार्थ में प्रतिपादियों को हतप्रभ करने का मधुर अपूर्व कौशल था। निगमानम के उद्भट व्याख्याता वेद मर्मज्ञ पूज्य पण्डित जी दयालु स्वभाव के थे। वे चमकती प्रतिभाओं को आगे बढ़ाने में परम सहयोगी रहे। श्री पं० राम

प्रसाद मिश्र बरेली, आचार्य श्री राम प्रसाद जी उपाध्याय एम. ए. फरीदपुर श्रीमती वेदाचार्या सावित्री देवी महान् पण्डित श्री रमेश चन्द्र जी शास्त्री, डा० श्रीमती महाश्वेता जी, श्रीमती निर्मला मिश्रा आचार्या, चि० सन्तोष कुमार जी 'कण्व' श्री सतीश चन्द्र शास्त्री, श्री सच्चिदानन्द शास्त्री मन्त्री सार्वदेशिक सभा दिल्ली, श्री मनमोहन तिवारी मन्त्री आर्य प्रतिनिधि सभा उत्तर प्रदेश, श्री पं० शिवकुमार जी शास्त्री पू० संसद सदस्य, स्व० श्री पं० प्रकाश वीर जी शास्त्री संसद सदस्य आदि उदीयमान प्रतिभाओं को उभरता हुआ देखकर पण्डित जी अपार प्रसन्न होते और इन सबकी भूरि भूरि प्रशंसा करते थे।

पूज्य पण्डित जी बड़े विनोदी स्वभाव के थे, बदायूँ आने पर इस कवि की पुत्रियों आचार्या मृदुला, मंजुला, वत्सला व पुत्र मेधाव्रत और वेदव्रत बच्चों से बहुत विनोद किया करते, बच्चे भी पूज्य पण्डित जी (बाबा) को चिढ़ाने से नहीं चूकते थे। आज आर्य समाज के दुर्भाग्य से तर्क और शास्त्रार्थ में स्वामी दर्शनानन्द जैसी वाग्मिता वाला वेद महारथी आज संसार से ९७ वर्ष की आयु में विदा हो चुके हैं।

उनके होनहार सद्गुणी सदाचारी सुपुत्र श्री अरविन्द लाल एम.ए. 'रामपुर गार्डन बरेली' एक उद्योगपति हैं, उनकी धर्मशीला भार्या श्रीमती सुशीला देवी तथा सुपौत्र, पौत्रियां, सुपुत्री श्रीमती प्रभा तथा भ्रातृज श्री रमेश चन्द्र विकट 'पूर्व एम.एल.सी.' पूज्य पण्डित जी के दिखलाये मार्ग पर चल रहे हैं।

पूज्य पण्डित जी आज भौतिक शरीर से नहीं हैं, परन्तु उनका अक्षय यशः शरीर तो अजर और अमर है। वेदवाणी, सुमन-संग्रह, वेद प्रकाश, सत्यार्थ प्रकाश का आलोचन, अथर्ववेद रहस्य आदि अनेक ग्रन्थ पूज्य शास्त्री ने लिखे जो धर्म जिज्ञासुओं को अनन्त काल तक प्रकाश देते रहेंगे।

— वेदाचार्या सावित्री देवी शर्मा
एम०ए०

# भारतीय संस्कृति के गौरव

शास्त्रार्थ महारथी

**पंडित बिहारी लाल शास्त्री**

सिद्धान्त वाचस्पति, व्याख्यान वाचस्पति, काव्यतीर्थ !